यस्य सः पादस्य लोपोऽहस्त्यादिभ्य इति [ पा० ५, ४, १३८ ] पादस्यान्त्यलोपः। परमेश्वरस्य सर्वप्राण्यात्मकत्वाद्यस्य यस्य प्राणिनो ये चक्षुरादयस्ते तदुपाधिकस्य परमेश्वरस्यैवेति सर्वत्र चक्षुरादयः सम्पद्यन्त इत्यर्थः॥ १९॥

किᳪस्विद्वनं क उ स वृक्ष आस यतो द्यावापृथिवी निष्टतक्षुः। मनीषिणो मनसा पृच्छतेदु तद्यदध्यतिष्ठद्भुवनानि धारयन्॥२०॥

पुनरपि प्रश्नः। स्विदिति वितर्के तद्वनं किमास बभूव उ अपि च स वृक्षकः आस यतो वनाद् वृक्षाच्च विश्वकर्मा द्यावा पृथिवी निष्टतक्षुः निस्ततक्ष निस्तक्ष्यालङ्कृतवान् वचनव्यत्ययः न हि तादृशं वनं वृक्षो वा सम्भवति। लोके हि गृहादिनिर्माणमिच्छन् कस्मिंश्चिद्वने कश्चिद् वृक्षं छित्त्वा तक्षणादिना स्तम्भादिकं करोति इह तन्नास्तीत्यर्थः। किञ्च हे मनीषिणः! विद्वांसः! मनसा पर्यालोच्य तत् इत् उ तदपि यूयं पृच्छत तत्किम् भुवनानि धारयन् सन् विश्वकर्मा यदध्यतिष्ठत् यत् स्थानमधिष्ठितवान् तदपि पृच्छत। कुम्भकारादिर्गृहादिकमधिष्ठाय घटादि करोति तदधिष्ठानमपि पृच्छत ऊर्णनाभिवदयमात्मारम्भण इति भावः॥ २०॥

या ते धामानि परमाणि यावमा या मध्यमा विश्वकर्मन्नुतेमा। शिक्षा सखिभ्यो हविषि स्वधावः स्वयं यजस्व तन्वं वृधानः॥२१॥

हे विश्वकर्मन्! हे स्वधावः! स्वधान्नमस्यास्तीति स्वधावान् तत्सम्बुद्धौ हे स्वधावः! मतुवसो रुः सम्बुद्धौ छन्दसीति [ ८, ३, १ ] रुः हे हविर्लक्षणान्नवन्! ते तव यानि परमाणि उत्कृष्टानि

धामानि या यानि अवमा अवमानि कनीयांसि धामानि उतापि च यानि मध्यमा धामानि इमानि इमा इमानि पूर्वोक्तानि त्रिविधानि धामानि सखिभ्यो यजमानेभ्यः शिक्ष देहि द्व्यचोऽतस्तिङ इति [ पा० ६, ३, १३५ ] संहितायां शिक्षपदस्य दीर्घः । क उपकार इति चेत् हविषि यजमानसम्बन्धिन्युपस्थिते सति तन्वं स्वशरीरं वृधानः वर्धयन् सन् स्वयं यजस्व । वयं यजाम इति कथं वक्तुं शक्यम् मनुष्यः कस्त्वां यष्टुं समर्थोऽत एवं ब्रवीमि स्वयं यजस्व । वर्धतेः शानचि व्यत्ययेन शपो लुक् वृधानः । तन्वमित्यत्र वा छन्दसीति [ पा० ६, १, १०६ ] पूर्वरूपाभावे यणादेशः ॥ २१ ॥

विश्वकर्मन् हविषा वावृधानः स्वयं यजस्व पृथिवीमुत द्याम् । मुह्यन्त्वन्ये अभितः सपत्ना इहास्माकं मघवा सूरिरस्तु ॥ २२ ॥

हे विश्वकर्मन् ! हविषा महत्तेन वावृधानः वर्धमानो जातहर्षः सन् मम यज्ञे पृथिवीं पृथिव्याश्रितानि भूतानि उतापि च द्यां द्युलोकाश्रितानि भूतानि स्वयं यजस्व मदनुग्रहाय । किञ्च त्वत्प्रसादादन्येऽभितः स्थिताः सपत्नाः शत्रवो मुह्यन्तु मोहं प्राप्नुवन्तु किञ्च इह यज्ञे मघवा इन्द्रोऽस्माकं सूरिः पण्डित आत्मज्ञानोपदेशकोऽस्तु ॥ २२ ॥

वाचस्पतिं विश्वकर्माणमूतये मनोजुवं वाजे अद्या हुवेम । स नो विश्वानि हवनानि जोषद्विश्वशम्भूरवसे साधुकर्मा ॥ २३ ॥

विश्वकर्मन् हविषा वर्धनेन त्रातारमि-

न्द्रमकृणोरबध्यम्। तस्मै विशः समनमन्त पूर्वीरयमुग्रो विहव्यो यथासत्॥ २४॥

द्वे ऋचौ व्याख्याते [ ८ अध्या० ४५, ४६ क० ] ॥ २३॥ २४॥

चक्षुषः पिता मनसा हि धीरो घृतमेने अजनन्नम्नमाने। यदेदन्ता अददृहन्त पूर्व आदिद्द्यावापृथिवी अप्रथेताम्॥ २५॥

का० [ १८, ४, १३ ] चक्षुषः पितेत्यपरमनुवाकेन। अष्टमेन षोडशगृहीतस्यापरमर्धं जुहोतीत्यर्थः॥ यदा इत् यदेव पूर्वे वसिष्ठादयो मुनयः अन्ताः विभक्तिव्यत्ययः अन्तान् द्यावाभूम्योरन्तप्रदेशानददृहन्त दृढीकृतवन्त दृंहतेः रूपम्। आत् इत् आत् अनन्तरवाची इदेवार्थे अनन्तरमेव द्यावाभूमिदार्ढ्यानन्तरमेव द्यावापृथिवी द्यावापृथिव्यौ अप्रथेतां पृथू अभूताम्। तदा द्यावापृथिवीप्रथनानन्तरं चक्षुषः पिता चक्षुरादीन्द्रियाणां पालको विश्वकर्मा मनसा धीरः सन् हि निश्चितमेने एते द्यावापृथिव्यौ प्रति घृतमुदकमजनदजनयत् छन्दस्युभयथेति [ पा० ३, ४, ११७ ] आर्धधातुकत्वाच्छपि णिचो लोपः रोदस्योर्दार्ढ्ये वृष्टिं कृतवान् इत्यर्थः। किं कुर्वन् नम्नमाने नममाने द्यावापृथिव्यौ स्तम्भयन्निति शेषः जगदनुग्रहाय रोदसी स्तम्भयन्नित्यर्थः। नमतेः शानचि नुगागमश्छान्दसः॥ २५॥

विश्वकर्मा विमना आद्विहाया धाता विधाता परमोत संदृक्। तेषामिष्टानि समिषा मदन्ति यत्रा सप्त ऋषीन् पर एकमाहुः॥ २६॥

यत्र यस्मिन् लोके सप्तऋषीन् सप्त च ते ऋषयश्च सप्तऋषयः ऋत्यक इति [ पा० ६, १, १२८ ] प्रकृतिभावः । तान् परः विभक्तेः सुः परेण विश्वकर्मणा सह एकमाहुः एकीभूतान् बुधा वदन्ति । यत्र लोके सप्तर्षयो विश्वकर्मणा सहैकत्वं प्राप्ताः तत्र लोके तेषां पुंसामिष्टानि अभिलषितानि वस्तूनि इषा अन्नेन आहुतिरसभूतेन सह सम्मदन्ति सम्मोदन्ते सम्यक् मोदयुक्तानि पुष्टानि भवन्ति ते विश्वकर्मलोके इष्टभोगान् प्राप्नुवन्तीत्यर्थः । तेषां केषाम् विश्वकर्मा येषां संदृक् सम्यक् पश्यतीति संदृक् सम्यग्द्रष्टा विश्वकर्मदृष्टाः सुखिनो भवन्तित्यर्थः । कीदृशो विश्वकर्मा विमनाः विशिष्टं मनो यस्य स तथा विभूतमनाः सर्वकर्मज्ञ इत्यर्थः । आत् अपि च विहायाः नभोवद्व्यापकः यद्वा विशेषेण जहाति त्यजति विहायाः संहर्त्ता । धाता धारयिता पोष्टा स्थितिकर्त्ता । विधाता उत्पादकः । उत अपि परमः सर्वेभ्य उत्कृष्टः विभक्तेराकारः । एवंविधो विश्वकर्मा येषां द्रष्टा ते मुच्यन्ते भक्तानेव पश्यति तस्माद्भक्तिः कार्येत्यर्थः ॥ २६ ॥

यो नः पिता जनिता यो विधाता धामानि वेद भुवनानि विश्वा । यो देवानां नामधा एक एव तꣳ सम्प्रश्नं भुवना यन्त्यन्या ॥२७॥

यो विश्वकर्मा नोऽस्माकं पिता पालकः जनिता जनयिता उत्पादकः जनिता मन्त्रे इति [ पा० ६, ४, ५३ ] निपातः । यो विधाता विशेषेण धारकः सेतुः यश्च विश्वा विश्वानि सर्वाणि धामानि स्थानानि भुवनानि भूतजातानि च वेद जानाति । यश्च एकोऽद्वितीय एव सन् देवानां बहूनां नामधाः नामानि दधाति करोतीति नामधाः नाम च पितैव

करोति। तस्मादन्या अन्यानि भुवना भुवनानि भूतजातानि सम्प्रश्नं सम्यक् प्रश्नो यस्यां क्रियायां यथा तथा तं विश्वकर्माणं यन्ति गच्छन्ति प्रलयकाले एकत्वं प्राप्नुवन्ति। यद्वा सम्प्रश्नं सम्यक् प्रष्टुं स्वाधिकारप्रश्नं कर्त्तुं भुवनानि यं यन्ति स एव स्वाधिकारेषु नियुङ्क्त इति भावः॥ २७॥

त आयजन्त द्रविणꣳ समस्मा ऋषयः पूर्वे जरितारो न भूना। असूर्ते सूर्ते रजसि निषत्ते ये भूतानि समकृण्वन्निमानि॥ २८॥

ते पूर्वे ऋषयो विश्वकर्मसृष्टा वसिष्ठाद्या अस्मै भूतग्रामाय द्रविणं धनं जललक्षणं समायजन्त सम्यक् आभिमुख्येन ददुः द्रविणं भोमजातं वा। यजतिर्दानार्थः। कथं ददुः न भूना न भूम्ना न बाहुल्येन मलोपश्छान्दसः किन्तु युक्त्या कामिवर्षित्वेनेत्यर्थः। कीदृशाः जरितारः स्तोतारः। ते के ये ऋषय इमानि भूतानि समकृण्वन् स्वादेः करोतेर्लङ् ये वसिष्ठादयो तानि सृजन्ति त एव उदकदानेन जीवयन्तीत्यर्थः। कीदृशाः असूर्ते असुभिः सप्तदशावयवैर्लिङ्गशरीरैरीरिता असूर्त्ताः असुपूर्वस्य ईर गतावित्यस्य छान्दस इडभावो निष्ठायाम् ईकारस्य पूर्वसवर्णदीर्घः जस एकारः। तथा रजसि अन्तरिक्षलोके निषत्ते निषण्णाः निषण्णाः स्थिताः जस एकारः। लोका रजांस्युच्यन्त इति [ निरु० ४, १९ ] यास्कः। कीदृशे रजसि सूर्ते सुष्ठु ईरिते प्रेरिते विस्तीर्णे सुपूर्वस्य ईरधातोर्निष्ठायां पूर्ववत्। नसत्तनिषत्तेत्यादिना [ पा० ८, २, ६१ ] निपातः॥ २८॥

परो दिवा पर एना पृथिव्याः परो देवेभि-

रसुरैर्यदस्ति। कं स्विद्गर्भं प्रथमं दध्र आपो यत्र देवाः समपश्यन्त पूर्वे ॥ २९ ॥

प्रश्नोत्तररूपा मन्त्राः। ब्रह्मविषयप्रश्नः। विभक्तिव्यत्ययबाहुल्यमत्र मन्त्रे। यत् अस्ति हृदीति शेषः यदीश्वरतत्त्वं हृत्पुण्डरीके अस्ति तत् दिवा परः द्युलोकादपि दूरे तिष्ठति दिवो दुर्ज्ञेयत्वात्। परस्शब्दः सान्तो दूरवाची। एना पृथिव्या अस्याः पृथिव्याः परः पृथिव्याः अपि दूरे। देवेभिरसुरैः देवेभ्योऽसुरेभ्यश्च परो दूरे दूरत्वं विलक्षणत्वम् सर्वजगद्विलक्षणत्वाद् गुरुशास्त्रविमुखैर्न ज्ञायत इत्यर्थः। किञ्च स्विदिति वितर्के आपः प्रथमं कं गर्भं दध्रे दधिरे अधारयन् धाञो लिटि तङि प्रथमबहुवचनस्य लिटस्तझयोरेशिरेजिति [ पा० ३, ४, ८१ ] इरेचि कृते तस्य इरयो रे इति [ पा० ६, ४, ७६ ] रे-आदेशे तस्य स्थानिवत्त्वादातो लोप इति चेत्यालोपे [ पा०, ६, ४, ६४ ] दध्रे इति रूपम्। पूर्वे देवाः प्रथमोत्पन्ना देवाः वसिष्ठादयो यत्र गर्भे समपश्यन्त दृष्टवः जगदिति शेषः। यदा स्थूलोऽप्ययं जगदाधारो गर्भरूपो न ज्ञायते तदात्यन्तसूक्ष्मं तत्त्वं न ज्ञायत इति किमु वक्तव्यमिति भावः ॥२९॥

तमिद्गर्भं प्रथमं दध्र आपो यत्र देवाः समगच्छन्त विश्वे। अजस्य नाभावध्येकमर्पितं यस्मिन् विश्वानि भुवनानि तस्थुः ॥ ३० ॥

प्रत्युत्तरमाह। आपः प्रथमं तमित् तमेव गर्भं दध्रे दधिरे यत्र कारणभूते गर्भे विश्वे सर्वे देवाः समगच्छन्त सङ्गताः सम्भूय वर्त्तन्ते। ननु तस्य गर्भस्य को वाधारस्तत्राह। अजस्य जन्मरहितस्य परमेश्वरस्य नाभावधि नाभि-